गणितम्, तेषामपि पञ्चत्रिंशादित्युपलभ्यमानेऽरुचिरिति हि गम्यते। एवं च नान्याद्दृशतदुक्तप्रकारेभिनिवेष्टव्यम्॥९४॥ न च तैस्त्रयोध्यायाः प्रक्षिप्ता इति किं नोक्तमितिवाच्यं चिरन्तनप्रसिद्ध्या द्वात्रिंशज्ज्ञानेपि के प्रक्षिप्ता इति तैरविचक्षणात्॥९५॥ एवमेव श्रीधरस्वामिभिरपि सौन्दर्यादिज्ञानाद्वा व्याख्याता अध्याया इत्यपि वक्तुं शक्यम्॥९६॥ अत एव द्वात्रिंशत् त्रिशतञ्चेतिपदद्वयस्वरसाच्च चकारसार्थक्यम्॥९७॥ न च चकारो भिन्नक्रमबोधनार्थं पूर्वार्धे सामानाधिकरण्येन च योन्यत्र वैय्यधिकरण्येनेतिवाच्यमप्रयोजकत्वात्॥९८॥ भिन्नविभक्तिनिर्देशेनैव तल्लाभाच्च॥९९॥ अतिसुलभ इष्टद इतिविशेषणयोः पुनरपि सामानाधिकरण्याच्च॥१००॥ न चोऽमानोपमेययोः सामान्यधर्मस्यैकपदेनोपादानमित्यपि नियमः, प्रकृत एव सहस्राण्यष्टादशेतिपदत्रयेण तन्निर्देशादत एवा'द्दनः संज्ञाया'मित्यात्वं नेत्यभियुक्ताः॥१०१॥ न च पूर्वोक्तमिथोविरोधवर्णने तत्र तत्राचार्यचरणोक्तिविरोधः। 'शब्दार्थसङ्गतीनां च स्पष्टा तत्र विरुद्धते'तिपूर्वं प्रतिज्ञायानास्थया तदुक्तेः॥१०२॥ न चानुक्रमणिकाध्यायेजामिलोपाख्यानानुक्तिविरोधः,नरकशेषत्वात्तत्प्रकरणस्य नरकवर्णनानुक्रमणेनैव तदनुक्रमणादविरोधात्॥१०३॥ अत्र तु सर्वत्रापि देशेष्वैतिह्यप्राप्त्यैव तेऽविगीता इति तदेव विगीतं माध्वाचार्यादिग्रन्थपर्यालोचनात्, ततो हि अलेख एवैषामुपलभ्यते॥१०४॥ यत्तु च प्राचीननवीनटीकासम्मत्या सिद्धेऽविगीतत्वे विगीतत्ववाद एव विगीत इति तदपि न, साम्प्रदायिकानामेकवाक्यतायामसम्पयिवाक्यानामेव, विगीततासम्पत्तेः प्रतिवादे निग्रहस्थानत्वाच्च॥१०५॥ यदपि श्रीवृन्दावने तल्लीलास्थानप्रसिद्ध्या स्वेष्टं साधयन्ति तच्चासाधीयः, इदानीं प्राचीनस्थानानां विशकलितत्वेनेदानीन्तनकल्पितलीलानुसरणेन च पुराणान्तरप्रसिद्धकल्पान्तरीयलीलानुसारितया च स्थानानामिष्टसिद्धिविघातकत्वाभावात्॥१०६॥ न च स्यात्त्रिशतीरूपं पात्राद्यिवस्य कल्पनात् त्रियुगं च त्रिभुवनं त्रिपूर्वं दृश्यते बहु॥१०७॥ न चेदेतच्छ्रीधरीयं पद्य प्राचां भाविष्यति प्रमितं श्रीधरैर्नो चेत् ते रूपं किं न संस्तुतं स्तुतिर्मूलेपि यस्यास्ति स्तुतं तदनुसारतः॥१०८॥ 'लघ्वक्षरं पूर्वं'मितिवाक्यं चापि विरुध्यते॥१०९॥ अत एव पुराणान्तरे 'ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसम्मितः हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा, गायत्र्या यस्य प्रारम्भस्तद् वै भागवतं विदुः, स्कन्धा द्वादश एवात्र कृष्णेन विहिताः शुभाः, द्वात्रिंशत्त्रिशतं पूर्णमध्याः परिकीर्तिता' इति। अत्र पूर्णपदस्वारस्याद् यथोक्तमेवाभिप्रेतम्। ननु तर्हि'पञ्चत्रिंशोत्तराध्यायात्त्रिशतीयुक्त ईश्वर' इति कथं कैश्चिदुच्यते, तत्रोच्यते, श्रीमद्भागवतस्याष्टादशपुराणगणनायां पञ्चमत्वस्य विजयवादे साधितत्वात् वृत्तौ सङ्ख्यावाचकानां पूर्णप्रत्ययार्थताया 'आचतुरं हि मे पशवो मिथुनायन्त'इत्यादौ दर्शनात् पञ्चशब्दस्य पञ्चमे भागवते त्रिंशोत्तरा नाम द्वात्रिंशत्त्रिशतीयुक्ता इतिव्याख्येयम्, परे तु कृत्यभावेपि पूर्णार्थतामिच्छन्ति, ज्योतिःशास्त्रे धर्मशास्त्रे

तथा दर्शनात्, 'षट् चतुर्थ्यर्थे'तिसूत्रे चतुर्ग्रहणं सार्थकं पूरणार्थे मा भूदिति, अन्यथा पुराणान्तरीय द्वात्रिंशत्त्रिशतं पूर्णमध्याया परिकीर्तिता' इत्यत्र पूर्णपदविरोधो दुरुद्धर, द्वात्रिंशत्त्रिशतमितिपाठवचनं दामोदरा उदाजहु । केचित् तु पक्ष इति पञ्चस्थाने पठन्ति, अये तु यथा वोपदेवेन 'प्रथमेष्टादशाध्याया' इत्यादिना यथाध्यायद्वयस्थाने कुत्र कुत्रचय कृत्वा एवंत्रिंशोत्तरत्रिशती उच्यते, विद्यमानपञ्चत्रिंशत्सङ्ख्या नाद्रियते, तथा ध्रुवादिचरिते एकैकाध्यायस्य अध्यायद्वयता विदधते, एतेन वचनद्वयस्यापि भागवतानुक्रमण्या विरोध उद्धृत । केचित् तु नेमं हरगौरीतन्त्रस्थं वचनम् प्रमाणयन्तीति दिक् । स्यादेतत् ।'य एतत्पूतनामोक्ष'मितिपद्य तु केचन विगीतमाहुस्तैरेवं प्रष्टव्या न वयम् । न तु पूतना लोकबालघ्नी'त्यादिपद्के मानाग्निलम् । पूर्वोत्तरग्रन्थयोर्हि सन्दश सुन्दरोन्यथा तेष्वपि श्लोकेषु 'तन्मातर' इतिरसुदर्शितेय इतिव्याचख्युरितिसुबोधिन्यां पद्यश्लोक-स्वरसाद् गोपीपरत्वं न युक्तमिति तदाशय, इतोप्यधिकं तत्र तत्राकरे द्रष्टव्यामिति दिक् ।

आन्ध्रो गङ्गाधरो भट्टः गिदागुरुकृपाबलः ।
अशुद्धबुद्धिशुद्ध्यर्थं जपमालां समाप्तवान् ॥१॥
अशुद्धबुद्धयो यायान विगीतान् ये न मन्वते ।
तद्धी. सम्पल्लये शुद्धा जपित्वा मालयांसकृत् ॥२॥

इत्यान्ध्रदेशीयगिदोपाह्वश्रीमद्गङ्गाधरभट्टकृता जपमालेयं गुरुकृपाबलेन समाप्ता ।

---

इतिश्रीमद्भागवतीयदशमस्कन्धस्य नवत्यध्यायेषु द्वादशत्रयोदश-चतुर्दशाध्यायानां प्रक्षिप्तत्वसमर्थनं

## समाप्तम्

---

(सं १९९२ का शु ५)